ஸம்ஸ்க்ருதஸ்ரீ:

# ॥ संस्कृतश्रीः ॥

संस्कृतविद्यासमिति पत्रिका

SAMSKRTASRI

ஸம்ஸ்க்ருதஸ்ரீ



A Fortnightly Bulletin of the Samskrit Education Society, Madras.



Annual Subscription Rs. 8-00

Single Copy 0-40 Ps.

Life Subscription Rs. 100-00

9, Single Mali Street, Tiruchirapalli-620 002.

माला—4 पुष्पम्—18

वाग्देव्यै नमः

चतुर्भुजे चन्द्रकलावतंसे
कुचोन्नते कुंकुमरागशोणे ।
पुण्ड्रेक्षुपाशांकुशपुष्पबाण-
हस्ते नमस्ते जगदेकमातः ॥

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥

कलि 5083-दुर्मति-मिथुन-23 (4-18) 7—7—81

एका एकाक्षरा चतुर्मुखी कुण्डिकाक्षमालेऽब्जे।
दधती गायत्री सा धियं शुभां मे प्रचोदयतु ॥

## एति जीवन्तमानन्दः

कृतं कर्म त्रिक्षणावस्थायि। क्षणान्तरे कर्मरूपेण विनश्यदपि, रूपान्तरं प्रतिपद्यते, यस्य अदृष्टमिति नाम मीमांसका वदति, सुकृत-दुष्कृताख्यां पापपुण्याख्यां पुराणेतिहासाः। सुकृतशीलमात्मानमभिमनुते कश्चित्। सत्यं स सुकृती। सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः। स विधिना उपस्थापितं किमपि दुष्कृतफलं भुञ्जानः, न तत्र निर्विद्यते। "यथा दुष्कृतं भोगेन नश्यत् उपलभ्यते, तथा सुकृतमपि भुक्तावशिष्टं मामुपतिष्ठतेव" इति स प्रत्याशंसते। कदेति तु न स जानाति, फलस्य अदृष्टोपनतिकतया। अत एव सादरं तं प्रतीक्षते "एति जीवन्तमानन्दो नरं वर्षशतादपि इति।

"कृतं सुकृतं यदि. कल्पते आनन्दाय। तादृशं कर्म आचरेयं, तदर्थं श्वः सर्वं संविधास्ये" इति जोषमुपविशन्तं श्रुतिः उपह्वरे कथयति, "न श्वःश्वमित्युपासीत। को हि मनुष्यस्य श्वो वेद" इति। "श्वः श्वः इति किमपि नातिपातयेः। करणीयं सद्य एव आचरेः" इति तस्या उपदेशः। "श्वोऽवश्यं विधास्ये इति संवदन्तं श्रुतिः शास्ति "को हि मनुष्यस्य श्वो वेद" इति। फलप्रतीक्षासमये वर्षशतमवधिं कुर्वन्त एव सन्तः, फलोपगकर्माचरणे "गृहीत इव केशेषु मृत्युना" इतीमं भावं पुरस्कुर्वते इति कापि विचित्रा परिपाटीयम्।

# धीरः कोऽपि समुद्धरिष्यति

१ धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीं
स्वप्नो नैष निराश्रयक्षुधितयोरेकाकिनो वा दिवा।
नापि स्वप्रतिभा कवेर्न च कथा पत्रे समारोपिता
सत्यं तत्; द्रढयेयुरादिपुरुषाः श्रीरामभोजादयः॥

२ उद्धारो भविताऽभवच्च, बहुधा दैन्ये विदूनाः प्रजाः
जीर्णारण्यमृगा यथा सरसतां संमार्गयन्तेऽधुना।
धीरोदात्तसुशासने किल सुखं देशस्य संभावितं
धूर्ताढ्ये बहुनायके कथमिदं संवर्धतां भारते!

३ त्रिंशद्वत्सरशासने नवनवाः संस्थाः कतीहोद्यताः
मात्सर्येण परं मिथस्तत इतः कृष्टा निकृष्टे पदे।
तस्मात्तत्र निराशया हि सुजनाश्शंसन्ति, संजानते
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम्॥

४ नेतृष्वद्य नवग्रहेष्वव कृतस्वस्वाशयैकाग्रहात्
पथ्यं किंचिदिदं, तदेव, तदु नो, नैवेद, एवं त्विदम्।
इत्यापातमनोज्ञकार्यकुशलेष्वन्धेषु का नो गतिः?
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम्॥

५ आस्तामद्य कथा सुभिक्षविषया, पानीयमात्रस्य चेत्
राज्यायत्तमुपायनं, प्रकृतितस्तच्चेन्न सिद्धं ततः।
दैवेऽप्यत्र पराङ्मुखे सुकृतिनः कस्याग्रतो रुद्यतां?
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम्॥

६ श्रद्धा नास्ति, तथापि संभ्रमतया विद्येति सन्धीयते
साप्युद्योगकरी न चेदुभयथा नैराश्यपात्रीकृताः।
उद्विग्ना बलवद्विरुध्य युवकाः कोलाहलं तन्वते
धीरः कोऽपि समुद्धरिष्यति भुवं पुण्यामिमां भारतीम्॥

शे. श्रीनिवासशर्मा, चिदम्बरम्

॥ श्रीगुरुभ्यो नमः ॥

श्रीमूककविविरचिता

# श्रीमूकपञ्चशती

श्रीब्रह्मानन्दयतीन्द्रकृतया
श्रीकामाक्षिविलासचन्द्रिकया व्याख्यया युता।

## स्तुतिशतकम्

पाण्डित्यं परमेश्वरि स्तुतिविधौ नैवाश्रयन्ते गिरां
वैरिञ्चान्यपि गुम्फनानि विगलद्गर्वाणि शर्वाणि ते।
स्तोतुं त्वां परिफुल्लनीलनलिनश्यामाक्षि कामाक्षि ते
वाचालीकुरुते तथापि नितरां त्वत्पादसेवादरः ॥ १ ॥

व्याख्यानमंगलाचरणम्

श्रीकाञ्चीनगरीविराजितमहाकामेशपीठस्थितां
अंकूरायितकुङ्कुमारुणलसद्गात्राम्बरालंकृताम्।
किंस्वित्कारिमनोहराकृतिमनंगापायहेतोरपि
श्रीयन्त्रालयमन्त्रितां मम मनोराजासने भावये ॥

अथ श्रीमूककवीश्वरः भगवतीपादारविन्दं शतशः संस्तुत्य, पुनः श्लोकशतकेन तां वाचा समर्चयति पाण्डित्यमित्यादिना। हे परमेश्वरि, परमा च सा ईश्वरी च परमेश्वरी, अर्थात् ईश्वरीणामीश्वरीत्यर्थः, श्रीमहाराज्ञी इति सहस्रनामसु कीर्तिता। शर्वाणि शिववल्लभे, इन्द्रवरुणभवशर्वैरित्यादिना आनुक्। परिफुल्लनीलनलिनश्यामाक्षि, परिफुल्लं च तत् नीलं च परिफुल्लनीलम्। उभयपदविशेषणकर्मधारयः। तच्च असौ नलिनं च परिफुल्लनीलनलिनं, तद्वत् श्यामाक्षि, अतिविकसितनीलाम्बुजातोपमितनेत्रि, उत्पलाक्षि, कामाक्षि काञ्चीपुराधीश्वरि अव, ते तव, स्तुतिविधौ स्तवनव्यापारे, विगलद्गर्वाणि, गर्वो मानसमुन्नतिः, शिथिलित-

गर्वाणि, बहुव्रीहिः, वैरिञ्चान्यपि विधातृसंबन्धीन्यपि, तस्येदमिति अण्, तस्य सरस्वतीनायकत्वेऽपि, गुम्फमानि वचनानि, गिरां वाचां, पाण्डित्यं कौशल्यं, नाश्रयन्ते नालम्बन्ते, असमर्थानीति यावत। अर्थात्, वागीश्वरस्य चतुर्मुखस्यापि अशक्यविषये। तथापि एवं स्थितेऽपि, त्वत्पादसेवादरः, तव पादौ त्वत्पादौ, तयोः सेवा भजनं, तस्मिन् आदरः त्वत्पादसेवादरः, आदरः अतिशयितं प्रेम, त्वां स्तोतुं वचोविषयीकर्तुं, वर्णयितुमित्यर्थः। मां नितरां अत्यन्तं वाचालीकुरुते, वाचालो वाग्मी, वाचो ग्मिनिः, अवाचालं वाचालं संपद्यमानं करोतीति वाचालीकुरुते। अभूततद्भावे च्विः, अस्य च्वौ इति संप्रसारणम्, आलजाटौ च बहुभाषिणि इति वाक्शब्दात् आलचि वाचालः इति रूपम्। भवत्याः अघटितघटनाधुरीणत्वात् अपण्डितमपि मां भवत्पादारविन्दभजनश्रद्धा तव स्तुतिविधौ प्रेरयति सिद्धाभीष्टं च करोतीति। 'मूकं करोति वाचालं पंगुं लंघयते गिरिम्।' इति हि भक्तिमहिमा। शार्दूलविक्रीडितं वृत्तं, 'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' इति तस्य लक्षणम् ॥ १ ॥

तापिञ्छस्तबकत्विषे तनुभृतां दारिद्र्यमुद्राद्विषे
संसाराख्यतमोमुषे पुररिपोर्वामांकसीमाजुषे।
कंपातीरमुपेयुषे कवयतां जिह्वाकुटीं जग्मुषे
विश्वत्राणपुषे नमोऽस्तु सततं तस्मै परंज्योतिषे ॥ २ ॥

श्री कामेश्वर्याः अचिंत्यशक्तिं वर्णयति — तापिञ्छेति। तापिञ्छस्तबकत्विषे, तापिञ्छः तमालवृक्षः, तमालवृक्षस्तापिञ्छः इति कोशः। स च नीलवर्णः। तस्य स्तबकः पुष्पगुच्छः, तस्य त्विडिव त्विट् यस्य तत्, तापिञ्छस्तबकत्विट् तस्मै, तापिञ्छस्तबकत्विषे, तमालपुष्पगुच्छवत् नीलवर्णाय, तनुभृतां शरीरभाजां, दारिद्र्यमुद्राद्विषे, दरिद्रस्य रिक्थस्य भावः दारिद्र्यं, दरिद्रा दुर्गताविति धातुः, तस्य मुद्रा ग्रन्थिः,

तस्य द्विट्, दारिद्र्यमुद्राद्विट्, तस्मै तादृशदुर्गतेः निवारकाय, संसारान्ध्यतमोमुषे, संसारो भवः जन्ममृत्युप्रवाहः, तन्नामकं तमः अन्धकारः, तस्य मुषे अपहारिणे। तमोगुणमूलकरागद्वेषादिबहुलतया संसारस्य तमोरूपेण कथनम्। पुररिपोः त्रिपुरान्तकस्य, वामांकसीमाजुषे, वामोत्संगरूपे कामपीठमिति प्रसिद्धे स्थले कृतवसतये। कंपातीरमुपेयुषे, कंपातीरशब्देन लक्षणया कांचीनगरं गृह्यते, अतः कांचीनगरमुपाश्रिताय। उपेयिवाननाश्वाननूचानश्चेति निपातनम्। उपेयिवच्छब्दात् चतुर्थी उपेयुषे इति। कवयतां गद्यपद्यरचनाधुरीणानां कवीश्वराणां जिह्वाकुटी जिह्वा रसना, सैव कुटी गृहं, जग्मुषे प्राप्तस्य, कसुश्चेति रूपम्। यद्यपि सूत्रमिदं वैदिकप्रयोगमनुशास्ति, निरंकुशत्वात् कवीनां लोके च बहुलप्रचारमाप्तवान् अयं शब्दः। विश्वत्राणपुषे, विश्वस्य लोकस्य सर्वस्य, जात्येकवचनं, सर्वेषां ब्रह्माण्डानामित्यर्थः, तेषां त्राणं रक्षणं, तं पुष्णातीति विश्वत्राणपूः—पुट् इति वा तस्मै विश्वत्राणपुषे जगद्रक्षणपरमतत्पराय, 'येन जातानि जीवन्ति' इति श्रुतिः। तस्मै अनिर्वाच्याय परंज्योतिषे उत्कृष्टाय महसे, सततं अविश्रान्तं, नमः प्रणामः, अस्ति इति शेषः। श्रीमातुः महः एव परमं महः। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति। इति श्रुतेः। ज्ञानप्रदायिनीं भगवतीं संसारबन्धनिवारणाय अजस्रं भजामि इति तात्पर्यम्॥

ये सन्ध्यारुणयन्ति शंकरजटाकान्तारचन्द्रार्भकं
सिन्दूरन्ति च ये पुरन्दरवधूसीमन्तसीमान्तरे।
पुण्यं ये परिपक्वयन्ति भजतां काञ्चीपुरे मामपी
पायासुः परमेश्वरप्रणयिनीपादोद्भवाः पांसवः ॥२॥

श्रीमातुः पादरजसां माहात्म्यमुद्घाटयति— ये संध्येति। काञ्चीपुरे ये पांसवः, शंकरजटाकान्तारचद्रार्भकं, शंकरः परमेश्वरः,

तस्य जटाः जटिलीभूताः शिखाः, त एव कान्तारं वनं, तत्र स्थितः चन्द्रार्भकः बालचन्द्रः, अर्थात् चन्द्रकलिका, तं सन्ध्यारुणयन्ति, सन्धौ भवा सन्ध्या, सन्ध्यायां सन्ध्याकाले, अरुणं अरुणवर्णाः, तदिव आचारयन्तीति सन्ध्यारुणायन्ति, उपमानादाचारे इत्यरुणशब्दादाचारार्थकः क्यच्। सन्ध्यारुणयन्ति। एतेन महेश्वरश्च अस्याः पादौ प्रणमतीति वर्णितम्। नो चेत् महेश्वरशिरसि स्थितस्य चन्द्रस्य पादपांसुसंबन्धकल्पनायोग्यत्वाभावात्। पुनः, ये पादपांसवः, पुरन्दरवधूसीमन्तसीमान्तरे, पुराणि दारयतीति पुरन्दरः। वाचंयमपुरन्दरौ चेति अमन्तत्वं निपात्यते। इन्द्रः तस्य वधूः पत्नी शची, तस्याः सीमन्तः केशपाशः, तस्य सीमान्तरे पदवीमध्ये सीमन्तदेशे इत्यर्थः। सिन्दूरन्ति सिन्दूरवदाचरन्ति। सर्वप्रातिपदिकानां क्विप् वा वक्तव्यः इति वचनात् सिन्दूरवदाचरन्तीति सिन्दूरन्ति इति रूपम्। प्रणमनपरायाः शचीदेव्याः केशपाशे यः सीमन्तमार्गः, तत्र संसज्जिताः पांसवः अरुणवर्णत्वात् सिन्दूरतिलकवदाचरन्ति इति। भजतां सेवापरायणानां, पुण्यं सुकृत, परिपक्वयन्ति सम्यक् फलोन्मुखानि कुर्वन्ति। पचो व इति पक्वमिति रूपम्। परिपक्वमिवाचरन्तीति परिपक्वयन्ति, क्यच् आचारे। ये अमी पुरतो वर्तमानाः परमेश्वरप्रणयिनीपादोद्भवाः, परमेश्वरस्य महादेवस्य, प्रणयिनी वल्लभा श्रीमाता, तस्याः पादोद्भवाः पादावेव उद्भवः स्थानं येषां ते पादोद्भवाः पादसंबन्धिनः, पांसवः रजांसि, मां पायासुः रक्षां कुर्यासुः। आशीर्लिङ्। भगवतीपादपांसूनां प्रभावं श्रीभगवत्पादाः सौन्दर्यलहर्यां प्रतिपादयामासुः। यथा—"तनीयांसं पांसुं तव चरणपंकेरुहभवं विरिंचिः संचिन्वन् विरचयति लोकानविकलम्। वहत्येनं शौरिः कथमपि सहस्रेण शिरसां हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम्।" इति त्रिमूर्तीनां परमपूज्यतया स्थितः परागः। अस्मद्विधानां पवित्रीकरणे किमाश्चर्यम्॥

---



# Our wide, wide range: It's only 50% of our story.



Yes. It's true that Colour-Chem offers you a wide range of pigments and dyes. Which covers a complete spectrum of shades —from yellow to black—for every product line. And which covers a variety of properties and price levels as well. To meet all your requirements.

And, what's more, this range keeps growing wider.

Yet, this is only 50% of our story...

The other 50% is the fact that our products are the result of world-class technology. And every batch is rigorously tested before it comes to you. To help you get good results. Batch after batch.

What's more, when dealing with us you get the benefit of our reliable technical service. Whether it's a question of assisting you with formulations and colour matching. Or helping you solve some tricky technical problem that threatens to disrupt your production.

These are the two halves of our story. And they add up to one thing: if you're in the market for pigments and dyes, your best bet is Colour-Chem.




COLOUR-CHEM LIMITED, 194, Churchgate Reclamation, Bombay 400 020

**Colour is the business of Colour-Chem**

श्रीगुरुभ्यो नमः

# ॥ संस्कृतश्रीः ॥



षडुत्तरशततमः पाठः—பாடம் 106

## कुमारसंभवः–हिमालयवर्णनम् (२)

9 तत्र कपोलकण्डूः विनेतुं सरलद्रुमाः विघट्टिता भवन्ति। तेषां स्नुतक्षीरतया प्रसूतः गन्धः सानूनि सुरभीकरोति।

10 तत्र दरीगृहेषु वनितासखाः वनेचराः (बहवः) निवसन्ति। दरीगृहाणां उत्संगेषु निषक्तभासः ओषधयः सर्वां रात्रिं ज्वलन्ति। ताः वनेचराणां अतैलपूराः सुरतप्रदीपा भवन्ति।

11 सः (हिमवान्) दिवा दिवाकरात् भीतं गुहासु लीनं अन्धकारं रक्षतीव। साधवः उच्चैःशिरसः। हिमवानपि उच्चैःशिराः। उच्चैःशिरसां शरणं प्रपन्ने क्षुद्रेऽपि सति इव ममत्वम्। नूनम्। (तत्र कः सन्देहः?)

12 (तत्र पर्वते चमर्यः वर्तन्ते। हिमवान् गिरिराजः। चमर्यः इतस्ततः लांगूलविक्षेपेण विसर्पिशोभैः चन्द्रमरीचिवत् गौरैः वालव्यजनैः तस्य गिरिराजशब्दं अर्थयुक्तं कुर्वन्ति।

13 तत्र (हिमवत्पर्वते) मन्दः शीतलः सुगन्धी वायुः प्रवहति। स भागीरथीजलप्रपातानां शीकरान् वहति। अतः शीतः। (पुष्पितं) देवदारुवृक्षं कंपयति अतः सुगन्धी भवति। स नृत्यतां शिखण्डिनां बर्हान् भिनत्ति। अतः मन्दं वाति इति ज्ञायते। तादृशः पवनः मन्विष्टमृगैः (श्रान्तैः) किरातैः आसेव्यते।

14 सूर्यः प्रभाते उदेति। तस्य किरणैः पद्माकरेषु पद्मानि विकसन्ति। हिमालयस्य अधः सानुषु शृंगेषु च बहवः पद्माकराः वर्तन्ते। पर्वतशृङ्गेषु आकाशे नक्षत्ररूपेण प्रकाशमानाः सप्तर्षयः मूर्तिधराः विचरन्ति। ते ब्राह्मे मुहूर्ते एव अग्रसरःसु रूढानि पद्मकुड्मलानि पूजार्थं अवचिन्वन्ति। अवशिष्टानि अग्रसरोरुहानि पद्मकुड्मलानि ऊर्ध्वमुखैः मयूखैः सूर्यः प्रबोधयति। सूर्यवीथीं अपि अतिक्रम्य प्रवृद्धः हिमवान् इति कवेः आशयः।

பதவுரை: कंडूः தினவுகள். विनेतुं போக்கிக்கொள்ள. सरलद्रुमाः ஒரு வகை வாசனையுள்ள பிசின் மரம். विघट्टिताः உராயப்பட்டன. स्नुतक्षीरतया பால் வடியும் தன்மையால். सानु மலைச்சரிவு. सुरभीकरोति மணமுடையதாக்குகிறது. वनितासखाः காதலிகளுடன் கூடிய. दरी குகை. उत्संगः உட்புறம். निषक्त-भासः பரவிய ஒளியுடைய. अतैलपूराः எண்ணெய் வார்க்கப்படாத. सुरतप्रदीपाः பள்ளியறை விளக்குகள். उच्चैःशिरसः பெருமையால் நிமிர்ந்த தலையுடையவர்கள். (பெருந்தலை) क्षुद्रः அற்பன். सति ஸாது விஷயத்தில். ममत्वं அபிமானம் ஆதரவு, பரிவு. चमरी கவரிமான். विक्षेपः வீசுதல். विसर्पिशोभैः ஒளி வீசுகின்ற. मरीचिः கிரணம். वालव्यजनैः சாமரங்களால். जलप्रपातः நீர் வீழ்ச்சி. शीकरः திவலை. शिखण्डी மயில். बर्हः தோகை. भिनत्ति அலைக்கிறது. अन्विष्टमृगैः மானைத் தேடியலைந்து ஓய்ந்த, पद्माकरः தாமரை ஓடை. मूर्तिधराः உருவமுடையவர்களாய். अग्रसरः குன்றின் மேலுள்ள தாமரை ஓடை. कुड्मलानि மொக்குகளை. अतिक्रम्य கடந்து. ऊर्ध्वमुख மேல் நோக்கிய முனை உடைய.

கவிதையைப் பார்ப்போம்.

9 कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम्।
तत्र स्नुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति॥

(तत्र कपोलकण्डूः विनेतुं करिभिः विघट्टितानां सरलद्रुमाणां स्नुतक्षीरतया प्रसूतः गन्धः सानूनि सुरभीकरोति)

10 वनेचराणां वनितासखानां दरीगृहोत्संगनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यां अतैलपूराः सुरतप्रदीपाः॥

(तत्र दरीगृहोत्संगनिषक्तभासः ओषधयः रजन्यां वनिता-सखानां वनेचराणां अतैलपूराः सुरतप्रदीपाः भवन्ति)

11 दिवाकरात् रक्षति (वै) गुहासु लीनं दिवा भीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसां सतीव॥

(सः) दिवा गुहासु लीनं दिवाकरात् भीतं अन्धकारं रक्षति इव। उच्चैःशिरसां शरणं प्रपन्ने क्षुद्रेपि सतीव ममत्वम्। नूनम्।

12 लांगूलविक्षेपविसर्पिशोभैः इतस्ततः चन्द्रमरीचिगौरैः।
तस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति वालव्यजनैः चमर्यः॥

(चमर्यः इतस्ततः लांगूलविक्षेप-विसर्पिशोभैः चन्द्रमरीचि-गौरैः वालव्यजनैः तस्य (हिमवतः) "गिरिराज" शब्दं अर्थयुक्तं कुर्वन्ति।

13 भागीरथीनिर्झरशीकराणां वोढा मुहुः कंपितदेवदारुः।
तद्वायुरन्विष्टमृगैः किरातैः आसेव्यते भिन्नशिखण्डिबर्हः॥

(भागीरथी-निर्झर-शीकराणां वोढा मुहुः कंपितदेवदारुः भिन्न-शिखण्डिबर्हः तद्वायुः अन्विष्टमृगैः किरातैः आसेव्यते)

14 सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्तमानः।
पद्मानि तस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैः मयूखैः॥

(अधः परिवर्तमानः विवस्वान् सप्तर्षिहस्तावचितावशेषाणि तस्य (हिमवतः) अग्रसरोरुहाणि पद्मानि ऊर्ध्वमुखैः मयूखैः प्रबोधयति)

*பயிற்சி:* 1. பாடத்தின் ஆரம்பத்திலுள்ள வசனப் பகுதிகளுக்கு பதம்பதமாக பொருள் எழுதுங்கள்.

2. கவிதைகளின் கீழே உள்ள அன்வயப் பகுதிக்கும் பொருள் எழுதுங்கள். பெரும்பாலும ஒன்ருயிருக்கும். சில இடங்களில் வேறுபட்டிருக்கும். அவற்றைத் தெரிந்து கொள்ளுங்கள்.

3. செய்யுட்களிலிருந்து உங்களுக்குத் தோன்றிய ஏதாவது பாதங்களை எடுத்து எழுதி அதிலுள்ள பதங்களுக்கு மட்டும் பொருள் கூறுங்கள். வசனநடைக்கு மாற்றாமல். உதாரணம் :

1 भवन्ति तत्रौषधयो रजन्यां slo 10-3

"ஆகின்றன அங்கு மூலிகைகள் இரவில்."

2 ममत्वं उच्चैःशिरसां सतीव

பரிவு மஹான்களுக்கு நல்லவனிடத்தில் போல்

3 अधो विवस्वान् परिवर्तमानः

கீழ்பகுதியில் சூர்யன் சஞ்சரிக்கின்ற

இப்படி ஒவ்வொரு பதத்தின் பொருளையும் எழுதி பாதம் பாதமாகப் பொருளுணர்ந்து கவிதையை ஜீரணிக்கப்பழகுங்கள். 10 செய்யுட்களுக்கு இவ்வாறு பயிற்சி பெற்றால் கத்திரிச் சித்திரம் போல் அமைந்த செய்யுட்களில் பதங்கள் எவ்வாறு அன்வய முறையால் இணைகின்றன என்பது நமக்கே விளங்கி விடும்.

4. விக்ரஹ வாக்யம் எழுதி ஸமாஸத்தின் பெயரைக் குறிப்பிடுங்கள்.

कपोलकण्डूः, सरलद्रुमाणां, दरी-गृह-उत्संगेषु, चन्द्रमरीचि-गौरैः, अर्थयुक्तं, गिरिराज-शब्दं, बालव्यजनैः, भागीरथी-निर्झर-शीकराणां, तद्वायुः, शिखण्डिबर्हैः।

5. बालव्यजनैः என்ற பதத்துக்கு இரண்டு வகை விக்ரஹ வாக்யங்கள் சொல்லலாம். இரண்டையும் எழுதி இங்கு எந்த வகை விக்ரஹ வாக்யம் பொருந்தும்? ஏன்? என்று எழுதுங்கள்.

6. ஸமாஸ பதம் எழுதி ஸமாஸத்தின் பெயரை எழுதவும்.

करिभिः विघट्टितानां, गुहासु लीनं



R. N. 30478/77—SAMSKRITA SRI—7-7-81
TN/TR/53 Dt. 1-10-80 S. S. P. TRICHY.



Printed by S. Naganathan, at Theni Printers, Trichy, Edited by Vaidya S. V. Radhakrishna Sastri and Published by A. Kuppuswamy, B. A., B. T., on behalf of the Samskrit Education Society, (Regd.) Trichy Branch : 9, Single Mall Street, Tiruchirapalli-620 002.